Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

Government Oriental Library Series.

Bibliotheca Sanskrita No. 38.

# तैत्तिरीयब्राह्मणम्

## भट्टभास्करमिश्र विरचित भाष्यसहितम्

### तृतीयाष्टके प्रथमभागः

(१–७ प्रश्नाः)

THE

# TAITTIRIYA BRAHMANA

WITH THE

## COMMENTARY OF BHATTABHASKARAMISRA

### Ashtaka III. Part I

EDITED BY

A. MAHADEVA SASTRI, B.A., M.R.A.S.

*Curator, Government Oriental Library, Mysore*

AND

L. SRINIVASACHARYA,

*Pandit, Government Oriental Library, Mysore*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF MYSORE

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS

1911

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# तृतीयाष्टक प्रथमभाग विषयसूचिका.



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





षष्ठः प्रपाठकः पशुहौत्रम्.—



सप्तमः प्रपाठकः अच्छिद्रं काण्डं प्रायश्चित्तेन मन्त्रैश्च यज्ञच्छिद्र-पूरणादच्छिद्रमुच्यते.—



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





---

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

श्रीः

# तैत्तिरीयब्राह्मणे तृतीयाष्टकम्

## अथ प्रथम प्रपाठक प्रारम्भः.

हरिः ओम् ॥ [1]अग्निर्नः पातु कृत्तिकाः । नक्षत्त्रं देवमिन्द्रियम् । इदमासां विचक्षणम् । हविरासञ्जुहोतन । [2]यस्य भान्ति रश्मयो यस्य केतवः । य-

---

[1] 'अग्निर्वा अकामयत'* इत्यत्राम्नातानां नक्षत्रेष्टीनां क्रमेण याज्यानुवाक्ये द्वेद्वे अग्निर्नः पात्वित्याद्याः ॥ प्रथमा अनुष्टुभः । अन्त्याः त्रिष्टुभः । वैश्वदेवं काण्डं समस्तोऽयं प्रश्नः । तत्र कृत्तिकानाम्—अग्निः देवता नः अस्मान् पातु रक्षतु कृत्तिकाश्च नक्षत्त्रं पातु । देवं देवनशीलं इन्द्रियं इन्द्रियवत् इन्द्रेण वा दृष्टम् ॥ आसां कृत्तिकानां अग्नेश्च आसन् आस्ये । 'पद्दन्' इत्यादिना आसन्भावः । इदं विचक्षणं विविधप्रकाशसाधनं हविः जुहोतन जुहुत । तप्तनादिना तनबादेशः ॥

[2] यस्य भान्तीति ॥ रश्मयः ज्वालाः केतवः धूमाः द्युतयो वा भान्तीत्येव । यस्य च स्वरूपाणि सर्वप्रकाराणि इमानि

---

*ब्रा, ३-१-४,

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्येमा विश्वा भुवनानि सर्वा । स कृत्तिकाभिरभि संवसानः । अग्निर्नो देवस्सुविते दधातु । [3]प्रजापते रोहिणी वेतु पत्नी । विश्वरूपा बृहती चित्रभानुः ॥ १ सा नो यज्ञस्य सुविते दधातु । यथा जीवेम शरद-स्सवीराः । [4]रोहिणी देव्युदगात्पुरस्तात् । विश्वा

---

विश्वानि भुवनानि भूतजातानि, सः अग्निः देवः कृत्तिकाभिः आ-भिमुख्येन संवसानः सहवसन् । संवसतेर्व्यत्ययेनात्मनेपदम् । मुक्च पाक्षिकमुक्तम् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वा— कृत्तिकाभिः आत्मानं अभिसंछादयन् ताभिः परिवृतत्वात् । अनु-दात्तेत्त्वात् लसर्वधातुकानुदात्तत्वम् । नः अस्मान् सुविते सुष्ठु इते प्राप्ते फले दधातु स्थापयतु । 'सूपमानात्क्तः' इत्यन्तोदा-त्तत्वम् । छान्दसो वकारोपजनः, तन्वादित्वाद्वा, अनुपसर्गसूतेर्वा निष्ठायां छान्दसः इडागमः ॥

[3]रोहिण्याः—प्रजापतेरिति ॥ प्रजापतेः स्वभूता रोहिणी नक्षत्रं पत्नी पालयित्री यज्ञस्य विश्वरूपा विश्वरूपैः उत्पाद्यैः तद्वती बृहती परिवृढा चित्रभानुः चायनीयदीप्तिः सा इदं हविः वेतु भुङ्क्ताम् । नः अस्मान् यज्ञस्य सुविते सुगमे फले दधातु, यथा वयं जीवेम शरदः बहून् संवत्सरान् सवीराः पुत्रपौत्रसहिताः ॥

[4]रोहिणी देवी द्योतमाना पुरस्तात् प्राच्यां उदगात् उ-देति । छान्दसो लुङ् । किं कुर्वती? विश्वानि रूपाणि रू-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रूपाणि प्रतिमोदमाना । प्रजापतिꣳ हविषा वर्धयन्ती । प्रिया देवानामुपयातु यज्ञम् । [5]सोमो राजा मृगशीर्षेण आगन्न् । शिवं नक्षत्रं प्रियमस्य धाम । आप्यायमानो बहुधा जनेषु । रेतः प्रजां यजमाने दधातु ॥ २ ॥ [6]यत्ते नक्षत्रं मृगशीर्षमस्ति । प्रियꣳ राजन्प्रियतमं प्रियाणाम् । तस्मै ते सोम हविषा वि-

---

पवतो भावान् प्रतिमोदमाना प्रत्येकं वा मोदयित्री प्रजापतिं आत्मानं च हविषा वर्धयन्ती प्रिया प्रीणयित्री अस्माकं यज्ञं उपयातु ॥

[5]मृगशीर्षस्य—सोमो राजेति ॥ आगन् आगच्छतु । छान्दसो लुङ्, 'मन्त्रे घस' इति च्लेर्लुक् । ईषा अक्षादित्वात्पूर्वेण संहिताभावः । अस्य सोमस्य इदं शिवं कल्याणतरं नक्षत्रं प्रियं धाम स्थानं, तस्मात् तेन सह आगच्छत्विति ब्रूमः । जनेषु जननानिमित्तं जनेषु वा यजमानेषु हविषा बहुधा आप्यायमानः वर्धयन् रेतः बीजं उदकं वा प्रजां च पुत्रादिं यजमाने दधातु ॥

[6]यत्त इति ॥ हे राजन्! सोम! ते नक्षत्रं मृगशीर्षं नामास्ति । प्रियं प्रीणयितृ प्रियाणामपि मध्ये प्रियतमं, तस्मै नक्षत्राय ते तुभ्यं च हविषा विधेम परिचरेम । नः अस्माकं द्विपदे चतुष्पदे च शं सुखहेतुः एधि भव । सामर्थ्यात्तेन सहेति गम्यते ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धेम। शं नं एधि द्विपदे शं चतुष्पदे । [7]आर्द्रया रुद्रः प्रथमान एति । श्रेष्ठो देवानां पतिरघ्नियानाम् । नक्षत्रमस्य हविषा विधेम । मा नः प्रजाꣳ रीरिषन्मोत वीरान् । [8]हेती रुद्रस्य परिणो वृणक्तु । आर्द्रा नक्षत्रं जुषताꣳ हविर्नः ॥ ३ ॥ प्रमुञ्चमानौ दुरितानि विश्वा । अपाघशꣳसं नुदतामरातिम् । [9]पुनर्नो देव्यदितिस्स्पृणोतु । पुनर्वसू नः पुनरेतां यज्ञम् । पुनर्नो देवा अभियन्तु सर्वे । पुनःपुनर्वो हविषा यजा-

[7]आर्द्रायाः—आर्द्रयेति ॥ आर्द्रया नक्षत्रेण प्रथमानः विस्तीर्यमाणतेजा एति नः यज्ञं प्राप्नोति । अघ्नियानां गवां पतिः तस्यास्य नक्षत्रं आर्द्रां विधेम परिचरेमं । नः प्रजां पुत्रपौत्रादिकं मा रीरिषत् मा हिंसीः । उत अपि च वीरान् पुत्रान् आश्रितोपाश्रितान् पुरुषान् ॥

[8]हेती रुद्रस्येति ॥ रुद्रायुधं नः परितो वृणक्तु वर्जयतु । नः हविर्जुषतां सेवताम् । अथ तौ रुद्र आर्द्रा च उभौ विश्वानि दुरितानि प्रमुञ्चमानौ । अघशंसं पापरुचिम् । यद्वा—मम पापशंसिनमरातिं अपनुदतां विशेषेण नाशयताम् ॥

[9]पुनर्वस्वोः—पुनर्न इति ॥ अदितिः देवी नः पुनःपुनः स्पृणोतु प्रीणयतु । स्पृ. प्रीतौ, पुनर्वसू च नक्षत्रं नः यज्ञं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मः। [10]एवा न देव्यदितिरनर्वा । विश्वस्य भर्त्री जगतः प्रतिष्ठा। पुनर्वसू हविषा वर्धयन्ती। प्रियं देवानामप्येतु पाथः ॥ ४ ॥ [11]बृहस्पतिः प्रथमं जायमानः। तिष्यं नक्षत्रमभि संबभूव। श्रेष्ठो देवानां पृतनासु जिष्णुः। दिशोऽनु सर्वा अभयं नो अस्तु। [12]तिष्यः

---

पुनःपुनः एतां आगच्छताम् । देवाः सर्वे च अभियन्तु आभिमुख्येनागच्छन्तु । गतमन्यत् ॥

[10]एवा नेति ॥ नकारः समुच्चये । एवा सांप्रतिकः एवं च, अयनशीला वा अदितिः देवी पृथिवी देवमाता वा शैलकन्या वा । 'अदितिः शैलकन्यायां पृथिव्यां देवमातरि' इत्यभिधानम् । अत्र अदितिशब्दो रुद्राणीवचनः । पूर्वनक्षत्रं रौद्रं, तयोरुभयोस्साहचर्यात् । अनर्वा अपापा अप्रच्युतिर्वा । यद्वा—सप्तम्या आकारः । एवा अयने अनर्वा अवद्यरहिता विश्वस्य भर्त्री धारयित्री पुनर्वसू नक्षत्रं आत्मानं च हविषा वर्धयन्ती पाथः अन्नरूपं हविः अप्येतु प्राप्नोतु । 'पाथसी सलिलोदनौ' इत्यभिधानम् ॥

[11]तिष्यस्य—बृहस्पतिरिति ॥ जायमानः तिष्यं नक्षत्रं प्रथमं प्रधानमभिलक्ष्य सम्बभूव । लक्षणहेत्वोः कर्मप्रवचनीयत्वात् द्वितीया । पृतनासु सङ्ग्रामेषु । दिशोऽनु सर्वासु दिक्षु अभयहेतुरस्तु । हेतौ कर्मप्रवचनम् ॥

[12]तिष्यो बृहस्पतिश्च नः पुरस्तात् आदौ शरीरे मध्यतो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पुरस्तादुत मध्यतो नः । बृहस्पतिर्नः परिपातु प॒श्चात् । बाधेतां द्वेषो अभयं कृणुताम् । सुवीर्यस्य पतयस्स्याम । [13]इदꣳ सर्पेभ्यो हविरस्तु जुष्टम् । आश्रेषा येषामनुयन्ति चेतः ॥ ५ ॥ ये अन्तरिक्षं पृथिवीं क्षियन्ति । ते नस्सर्पासो हवमागमिष्ठाः । [14]ये रोचने सूर्यस्यापि सर्पाः । ये दिवं देवीमनु संचरन्ति । येषामाश्रेषा अनुयन्ति कामम् । तेभ्यस्सर्पे-

---

यौवने च पश्चादन्ते वार्धके च सर्वतः पालयतु । द्वेषः द्वेषम् । कर्मण्यसुन् । यद्वा—द्वेष्टृन् । विजन्तात् शस् । बाधेतां नाशयताम् । नः अभयं च कृणुतां कुरुताम् । सुवीर्यस्य शोभनवीर्यस्य ॥

[13]आश्लेषाणाम्—इदं सर्पेभ्य इति ॥ जुष्टं प्रियं अस्तु । आश्रेषा नक्षत्रं येषां चेतः अनुयन्ति, क्षियन्ति अधिवसन्ति। ते सर्पासः हवं यज्ञं आगमिष्ठाः अतिशयेन आगन्तारो भवन्तु । आगन्तृशब्दात्तृन्नन्तात् 'तुश्छन्दसि' इतीष्ठन्प्रत्यये 'तुरिष्ठेमेयस्सु' इति टिलोपः ॥

[14]ये रोचन इति ॥ ये सर्पाः सूर्यस्यापि रोचने मण्डले नियुक्ताः वसन्ति । ये च दिवं देवीं द्योतनवतीं अनुसंचरन्ति अनुव्याप्य संचरन्ति । येषां च कामं इच्छां आश्रेषा अनुयन्ति अनुसरन्ति । तेभ्यस्सर्पेभ्यः साश्रेषेभ्यः इदं मधुमत् मधुररसवत् हविः जुहोमि ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भ्यो मधुमज्जुहोमि । [15]उपहूताः पितरो ये मघासु । मनोजवसस्सुकृतस्सुकृत्याः । ते नो नक्षत्रे हवमागमिष्ठाः । स्वधाभिर्यज्ञं प्रयतं जुषन्ताम् ॥ ६ ॥ [16]ये अग्निदग्धा येऽनग्निदग्धाः । येऽमुं लोकं पितरः क्षियन्ति । याꣳश्च विद्म याꣳ उ च न प्रविद्म । मघासु यज्ञꣳ सुकृतं जुषन्ताम् । [17]गवां पतिः फल्गुनीनामसि

---

[15]मखानां—उपहूता इति ॥ ये पितरः मघासु उपहूताः देवतात्वेन अनुज्ञाताः मनोजवसः मनसा तुल्यवेगाः सुकृतः सुष्ठुकर्तारः सुकृत्याः शोभनकर्तव्याः । ते नः हवं आगमिष्ठाः अतिशयेनागन्तारो भवन्तु । किमर्थम्? नक्षत्रे मघानक्षत्रनिमित्तं आत्मार्थं च । निमित्तात्सप्तमी । पितरः समघाः स्वधाभिः अन्नैः हविर्भिः प्रयतं शुद्धं संस्कृतं यज्ञं जुषन्तां सेवन्ताम् ॥

[16]ये अग्निदग्धा इति ॥ अग्निनैव दाह इति सामर्थ्याद्गम्यते ये संस्कृतेनाग्निना दग्धाः पितरः ये चानग्निदग्धाः मिथ्याग्निदग्धाः येच पितरः अमुं लोकं, इमं लोकमित्युपलक्षणम् । क्षियन्ति अधिवसन्ति । यांश्च वयं विद्म जानीमः, यानपि च न प्रविद्म प्रकर्षेण न जानीमः ते सर्वे पितरः मघासु मघानिमित्तं अस्माकं सुकृतं यज्ञं जुषन्तां सेवन्ताम् ॥

[17]फल्गुन्योः—गवां पतिरिति ॥ गवां गोमतीनां[1] फल्गु-

---

[1] ग. गोजातीनाम्.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वम् । तदर्यमन्वरुण मित्र चारु । तं त्वां वयꣳ संनितारꣳ सनीनाम् । जीवा जीवन्तमुप संविशेम । [18]येनेमा विश्वा भुवनानि संजिता । यस्यं देवा अनु संयन्ति चेतः ॥ ७ ॥ अर्यमा राजाऽजरस्तुविष्मान् । फल्गुनीनामृषभो रोरवीति । [19]श्रे-

नीनां फल्गुन्योश्च नक्षत्रस्य पतिः स्वामी त्वमसि । यद्वा— फल्गुन्योः देवताभूतः गवां उदकानां गवामेव वा पतिः पालयिता असि । 'फल्गुनीप्रोष्ठपदानां च नक्षत्रे' इति बहुवचनम्। यस्मादेवं तस्मात् हे अर्यमन्! वरुण! वारक! दुरितानां, हे मित्र! प्रमितेरपि त्रायक! तं तादृशं त्वां सनितारं संविभक्तारं सनीनां धनानां जीवन्तं नित्यजीविनं वयं जीवाः सम्यक् जीवन्तः चारु शोभनं उपसंविशेम उपसंप्राप्नुयाम ॥

[18]येनेमा इति ॥ इमानि विश्वानि भुवनानि येन संजिता सम्यक् जितानि सहैव वा जितानि । देवा अपि यस्य चेतः चित्तं अनुसंयन्ति संगच्छन्ति । सोऽर्यमा राजा दीप्तिमान् अजरः जरामरणरहितः[1] तुविष्मान् वृद्धिमान् । फल्गुनीनां गोस्थानीयानां ऋषभः सेक्ता रोरवीति भृशं शब्दायते ख्यापयत्यात्मानमित्यर्थः ॥

[19]उत्तरफल्गुन्योः—श्रेष्ठ इति ॥ देवानां मध्ये श्रेष्ठः प्रशस्यतमोसि हे भगवः! ऐश्वर्यादिमन्! 'मतुवसो रुः' इति रुत्वम् ।

[1] ग. अविनाशः.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ष्ठो देवानां भगवो भगासि । तत्त्वा विदुः फल्गुनीस्तस्यं वित्तात् । अस्मभ्यं क्षत्त्रमजरꣳ सुवीर्यम् । गोमदश्ववदुपसंनुदेह । [20]भगो ह दाता भग इत्प्रदाता । भगो देवीः फल्गुनीराविवेश । भगस्येत्तं प्रसवं गमेम । यत्र देवैस्सधमादं मदेम ॥ ८ ॥ [21]आयातु देवस्सवितोपयातु । हिरण्ययेन सुवृता

हे भग! तत् तं, द्वितीया लुप्यते । तादृशं त्वां उत्तराः फल्गुन्यः विदुः जानन्ति । यद्वा—तत् तस्मात् त्वां फल्गुन्यः लभन्ते सेवन्ते । त्वमपि तस्य महिमानं वित्तात् जानीथाः । कर्मणि षष्ठी । ततः तादृशं आत्मनो माहात्म्यं विद्वान् तादृशीभिः फल्गुनीभिः सह त्वं अस्मभ्यं क्षत्त्रं बलं अजरं अनुपक्षयं सुवीर्यं शोभनवीरकर्मयुक्तं गोमत् बहुगु अश्ववत् प्रशस्ताश्वं इह कर्मणि उपसंनुद अस्माकं समीपे प्रेरय। तिङन्तस्य उदात्तत्वाभावात् गत्योर्निघाताभावः ॥

[20]भगो हेति ॥ भगो दाता भग एव प्रदाता प्रकर्षेण दाता भग एव देवीः देवनस्वभावाः फल्गुनीः उत्तराः आविवेश अनुप्रविश्य तिष्ठति । तस्मात् भगस्येत् । इदित्यव्ययम् । भगस्यैव तं प्रसवं अनुज्ञां गमेम गम्यास्म । 'लिङ्याशिष्यङ्' । कम्? यत्र प्रसवे सति देवैः सधमादं सहमादं मदेम माद्येम तं प्रसवं गमेमहि ॥

[21]हस्तस्य—आयात्विति ॥ देवस्सविता आयातु आग-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रथैन । वह॒न् हस्त॑ꣳ सु॒भगं॑ वि॒द्मनाप॑सम् । प्र॒य-च्छन्त॑ं प॒पुरि॑ं पु॒ण्य॒मच्छ॑ । [22]हस्त॑ः प्रय॑च्छत्व॒मृत॑ं वसी॑यः । दक्षि॑णे॒न प्रति॑गृभ्णीम एनत् । दा॒तार॑-म॒द्य स॑वि॒ता वि॑देय । यो नो॒ हस्ता॑य प्रसु॒वाति॑ य॒-

च्छतु अस्मान् प्रति उपयातु च उपगच्छतु चास्मत्पार्श्वम् । हिर ण्ययेन हिरण्यविकारेण सुवृता सुवृत्तिकेन । त्रिचक्रादित्वादुत्त-रपदान्तोदात्तत्वम् । ईदृशेन रथेनायातु । हस्तं नक्षत्रं सुभगं शोभनधनं विद्मनापसं विद्मनं विदितं विख्यातं अपसं कर्म यस्य तादृशम् । विदेर्लुटि धातोर्मुमागमः । प्रयच्छन्तं अभिम-तानि ददतं पपुरिं पूरयितारं कामानाम् । 'आदृगमहन' इति किन् प्रत्ययः । पुण्यं पावनं लोकस्य ईदृशं हस्तं रथेन आत्मीयेन वहन् अच्छ अस्मदाभिमुख्येन आयातु ॥

[22]हस्तः प्रयच्छत्विति ॥ हस्तः नक्षत्रं प्रयच्छतु ददातु अमृतं अमरणहेतुं धनं वसीयः प्रशस्ततरम् । एनत् धनं दक्षिणेन हस्तेन वयं पूजितं[1] प्रति गृभ्णीमः । एनत् इत्य-न्वादेशो धनवाची । 'हृग्रहोर्भः' इति भत्वम् । अद्य अ-स्मिन्नहनि तमपि दातारं विदेय जानीयां लभेय वा । लिङ्या-शिष्यङ् । तस्य दातृत्वमद्योपलप्सीय । यः सविता हस्ताय नक्ष-त्राय नः यज्ञं प्रसुवाति अनुजानाति । लेट्याडागमः ॥

[1] क. पूजार्थे.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ज्ञम् । [23]त्वष्टा नक्षत्रमभ्येति चित्राम् । सुभꣳसꣳ युवतिꣳ रोचमानाम् ॥ ९ ॥ निवेशयन्नमृतान्मर्त्याꣳश्च । रूपाणि पिꣳशन्भुवनानि विश्वा । [24]तन्नस्त्वष्टा तदु चित्रा विचष्टाम् । तन्नक्षत्रं भूरिदा अस्तु मह्यम् । तन्नः प्रजां वीरवतीꣳ सनोतु । गो-

---

[23]चित्रायाः—त्वष्टेति ॥ त्वष्टा चित्रां नक्षत्रं अभ्येति आभिमुख्येन गच्छति । तया एकीभवति । सुभंससं शोभनदीप्तिं 'भस भर्त्सनदीप्त्योः' असुनि अनुस्वारोपजनः छान्दसः । यद्वा—सुभसत् शोभनजघना । छान्दसो विकारः । पर्यायान्तरं वा भसदः । युवतिं मिश्रिणीं रोचमानां दीप्यमानां त्वष्ट्रे वा रोचमानाम् । किं कुर्वन्नभ्येति? अमृतान् देवान् मर्त्यान् मनुजान् । चकारस्सर्वसमुच्चये । निवेशयन् यथास्वरूपं स्थापयन् । किञ्च—रूपाणि रूपवन्ति रूपणीयानि वा विश्वानि भुवनानि भूतानि पिंशन् अवयववन्ति रूपयन् । पिश अवयवे, व्यत्ययेन श्नम् ॥

[24]तन्न इति ॥ त्वष्टा चित्रा च नः अभिमतं विचष्टां व्यक्तं वदतु, उत्पादयत्विति यावत् । किं च—तत् चित्राख्यं नक्षत्रं मह्यं भूरिदा बहुनो धनस्य दातृ अस्तु । लिङ्गव्यत्ययः, चित्राभिप्रायं वा स्त्रीत्वम् । तत् देवता नक्षत्रं च तद्द्वयं नः वीरवतीं विक्रान्तपुरुषवतीं प्रजां सन्ततिं सनोतु ददातु । षणु दाने । गोभिरश्वैश्च नः यज्ञं समनक्तु समृद्धं करोतु ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भिर्नो अश्वैस्समनक्तु यज्ञम् । [25]वायुर्नक्षत्रमभ्येति निष्ट्याम् । तिग्मशृङ्गो वृषभो रोरुवाणः । समीरयन्भुवना मातरिश्वा। अप द्वेषाꣳसि नुदतामरातीः ॥ १० ॥ [26]तन्नो वायुस्तदु निष्ट्या शृणोतु । तन्नक्षत्रं भूरिदा अस्तु मह्यम् । तन्नो देवासो अनुजानन्तु कामम् । यथा तरेम दुरितानि विश्वा । [27]दूरमस्मच्छत्रवो यन्तु भीताः । तदिन्द्राग्नी कृणु-

[25]स्वातेः—वायुरिति ॥ निष्ट्या स्वातीनक्षत्रं वायुः अभ्येति अभिगच्छति । तिग्मशृङ्गः तीक्ष्णतेजाः वृषभः वर्षिता रोरुवाणः शब्दायमानः । यङ्लुगन्ताद्व्यत्ययेनात्मनेपदम् । भुवनानि भूतजातानि समीरयन् समन्तात् प्रेरयन् मातरिश्वा विश्वं मातीति विश्वमातर्याकाशे श्वयति वर्धते[1] नः द्वेषांसि द्वेष्याणि अरातीः अदातॄंश्च । लिङ्गव्यत्ययः । अपनुदतां नाशयतु ॥

[26]तन्न इति ॥ तत् नः अस्मदभिमतं वायुः शृणोतु यथाप्रार्थनं ददात्विति यावत् । निष्ट्या स्वाती च तच्छृणोतु । तत् नक्षत्रं भूरिदा अस्तु मह्यं तं अस्माकं कामं इष्टं देवा अनुजानन्तु । कः पुनस्स इत्याह—यथा वयं दुरितानि विश्वानि तरेम, तथाऽनुजानन्तु ॥

[27]विशाखयोः—दूरमिति ॥ अस्मत् अस्मत्तः भीताश्शत्रवो

[1] क. वर्धमानः.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तां तद्विशाखे । तन्नो देवा अनुमदन्तु यज्ञम् । पश्चात्पुरस्तादभयं नो अस्तु । [28]नक्षत्राणामधिपत्नी विशाखे । श्रेष्ठाविन्द्राग्नी भुवनस्य गोपौ ॥ ११ ॥ विषूचश्शत्रूनपबाधमानौ । अप क्षुधं नुदतामरातिम् । [29]पूर्णा पश्चादुत पूर्णा पुरस्तात् । उन्मध्यतः पौर्णमासी जिगाय । तस्यां देवा अधि संवसन्तः । उत्तमे नाकं इह मादयन्ताम् । [30]पृथ्वी सु-

---

दूरं यन्तु पलायन्ताम् । तदभिमतं इन्द्राग्नी कृणुतां कुरुतां, विशाखे च नक्षत्रं तत्कृणुतामित्येव, तत्तत्साधनमस्माकं यज्ञं देवाः अनुमदन्तु अनुमोदतां फलनिष्पत्तिमनुजानन्तु । ततश्चास्माकं पश्चात्पुरस्ताच्च सर्वास्ववस्थासु अस्माकमभयमस्तु ॥

[28]नक्षत्राणामिति ॥ नक्षत्राणां मध्ये अधिपत्नी अधिकं पालयित्र्यौ विशाखे नक्षत्रं, तद्देवते इन्द्राग्नी श्रेष्ठौ प्रशस्यतमौ भुवनस्य भूतजातस्य गोपौ गोपयितारौ अतोऽस्माकं विषूचः विष्वग्गतान् इतश्चेतश्च पलायितान् अपबाधमानौ पीडयन्तौ अस्माकं क्षुधं अरातिं शत्रुस्थानीयाम् । यद्वा—क्षुधं अरातिं चापनुदताम् ॥

[29]पौर्णमास्याः—पूर्णा पश्चादिति ॥ व्याख्याता पञ्चमाद्ये* ॥

[30]पृथ्वीति ॥ पृथ्वी विस्तीर्णा सुवर्चाः शोभनदीप्तिः गु-

---

*सं. ३-९-१.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वर्चा युवतिस्सजोषाः । पौर्णमास्युदंगाच्छोभंमाना । आप्याययन्ती दुरितानि विश्वा । उरुं दुहां यजमानाय यज्ञम् ॥ १२ ॥

चित्रभानुर्यजमाने दधातु हविर्नः पाथश्चेतो जुषन्तां चेतो मदेम रोचमानामरातीर्गोपौ यज्ञम्॥१

[1]ऋध्यास्म हव्यैर्नमसोपसद्यं । मित्रं देवं मित्रधेयं नो अस्तु । अनूराधान् हविषा वर्धयन्तः ।

वतिः मिश्रिणी सजोषाः समानप्रीतिः अस्माभिः सर्वाभिर्वा प्रजाभिः पौर्णमासी तिथिः उदगात् उदेति उच्छ्रितिमागच्छति । शोभमाना आप्याययन्ती वर्धयन्ती विश्वानि दुरितानि दुरितवन्ति दुर्गतिनिवारणेनाप्याययन्ती सा यजमानाय उरुं विस्तीर्णं यज्ञं दुहां दुग्धाम् । 'लोपस्त आत्मने पदेषु' इति तलोपः ॥

इति तैत्तिरीयब्राह्मणे तृतीयाष्टके प्रथमप्रपाठके
प्रथमोऽनुवाकः.

---

[1]अनूराधानां—ऋध्यास्मेति ॥ ऋध्यास्म समृद्धा भूयास्म हव्यैः हविर्भिः नमसा प्रणिपातेन च मित्रं देवं उपसद्य उपसङ्गम्य ऋध्यास्म स च देवोऽस्माकं मित्रधेयं मित्रमस्तु । स्वा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शतं जीवेम शरदस्सवीराः । [2]चित्रं नक्षत्रमुदगात्पुरस्तात् । अनूराधास इति यद्वदन्ति । तन्मित्र एति पथिभिर्देवयानैः । हिरण्ययैर्विततैरन्तरिक्षे । [3]इन्द्रो ज्येष्ठामनु नक्षत्रमेति । यस्मिन्वृत्रं वृत्रतूर्ये ततार ॥ १३ ॥ तस्मिन्वयममृतं दुहानाः । क्षुधं तरेम दुरितिं दुरिष्टिम् । [4]पुरन्दराय वृषभाय धृ-

र्थिको धेयप्रत्ययः । यद्वा—मित्रेण यत् धेयं देयं तन्नोऽस्तु । वयं च अनूराधान् नक्षत्रं हविषा तदीयेन वर्धयन्तः शतं जीवेम शरदः सवीराः गतम्* ॥

[2]चित्रमिति ॥ चित्रं चायनीयं इदं नक्षत्रं पुरस्तात् उदगात् उदेति । अनूराधास इति यन्नक्षत्रं वदन्ति लौकिका अपि । तत् नक्षत्रं मित्रः एति पथिभिः देवयानैः देवा यै गच्छन्ति । हिरण्ययैः हितरमणीयैः अन्तरिक्षे विततैः ॥

[3]ज्येष्ठायाः—इन्द्र इति ॥ ज्येष्ठां नक्षत्रं इन्द्रोऽन्वेति अनुगच्छति । यस्मिन् नक्षत्रे निमित्तभूते वृत्रतूर्ये वृत्रवधार्थे सङ्ग्रामे वृत्रं इन्द्रः ततार आक्रम्य हतवान् । वयमपि तस्मिन् नक्षत्रे निमित्ते अमृतं दुहानाः क्षुधं तरेम नाशयेम । दुरितिं दुरिष्टिं च दुर्यागफलम् ॥

[4]पुरंदरायेति ॥ पुरंदराय मेघानां दारयित्रे । 'वाचंयमपुरंदरौ'

* ब्रा. ३-१-१,

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ष्णवे । अषाढाय सहमानाय मीढुषे । इन्द्राय ज्येष्ठा मधुमद्दुहाना । उरुं कृणोतु यजमानाय लोकम् । [5]मूलं प्रजां वीरवतीं विदेय । पराच्येतु निरृतिः पराचा । गोभिर्नक्षत्रं पशुभिस्समक्तम् । अहर्भूयाद्यजमानाय मह्यम् ॥ १४ ॥ [6]अहर्नो अद्य सुविते दधातु । मूलं नक्षत्रमिति यद्वदन्ति । प-

---

इति निपातः । वृषभाय वर्षयित्रे धृष्णवे धर्षणशीलाय शत्रूणाम् । अषाढाय केनचिदप्यनभिभूताय सहमानाय सर्वस्याभिभवित्रे मीढुषे सेक्त्रे ईदृशाय इन्द्राय मधुमत् मधुरं हविः दुहाना क्षारयन्ती ज्येष्ठा नक्षत्रं यजमानाय उरुं लोकं स्थानं कृणोतु करोतु ॥

[5]मूलस्य—मूलमिति ॥ मूलं नक्षत्रं प्रजां वीरवतीं विक्रान्तपुरुषवतीं ईदृश्याः प्रजाया हेतुम् । तद्धेतुत्वात्ताच्छब्द्यम् । विदेय लप्सीय । मूलहेतुकां वा प्रजां विदेय । पराची परागता वैमुख्यं भजमाना निरृतिः कृच्छ्रापत्तिः मूलस्य देवता एतु इतो गच्छतु पराचा अपुनरावृत्तिकेन मार्गेण । तथासति गोभिः पशुभिश्चान्यैः समक्तं सङ्गतं नक्षत्रं अहः मूलस्येयं संज्ञेत्येके । अहराख्यं नक्षत्रं अहरिव प्रकाशकं निरृतिव्यपगमेनेत्यन्ये । तदीदृशं नक्षत्रं मह्यं यजमानाय गोभिः पशुभिः समक्तं भूयात् ॥

[6]अहर्न इति ॥ अहराख्यं नक्षत्रं अहरिव प्रकाशतां गतं वा अद्य अस्मिन्कर्मणि नः सुविते सुष्ठु गन्तव्ये फले दधातु ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रांचीं वाचा निरृंतिं नुदामि । शिवं प्रजायै शिवमस्तु मह्यम् । [7]या दिव्या आपः पयसा संबभूवुः । या अन्तरिक्ष उत पार्थिवीर्याः । यासामषाढा अनुयन्ति कामम् । ता न आपश्शः स्योना भवन्तु । [8]याश्च कूप्या याश्च नाद्यास्समुद्रियाः । याश्च वैशन्तीरुत प्रासचीर्याः ॥ १५ ॥ यासामषा-

---

मूलं नक्षत्रमिति यद्वदन्ति लोकेऽपि, अथ तद्देवतां निरृतिं वाचा मन्त्रेण पराचीं अपुनरावृत्तां नुदामि । यत इतो गमयामि, ततश्च शिवं कल्याणं प्रजायै मदीयायै मह्यं चास्तु ॥

[7]अषाढानाम्—या दिव्या इति ॥ याः दिव्याः दिवि भवाः वर्ष्या आपः पयसा अन्नहेतुना पेयत्वेन वा इत्थंभूताः सम्बभूवुः सम्भवन्ति पयसा सह भवन्ति उत्पद्यन्ते । याः च अन्तरिक्षे सम्भवन्ति । अपि च पार्थिवीः पार्थिव्यश्च । 'पृथिव्या ञाञौ' इत्यञ्प्रत्ययः, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । यासां अपां कामं इच्छां अषाढाः नक्षत्रं अनुयन्ति अनुगच्छन्ति ता आपः स्योनाः सुखरूपाः नः शं सुखहेतवो भवन्तु ॥

[8]याश्चेति ॥ याश्च आपः कूप्याः कूपे भवाः । 'भवे छन्दसि' इति यत् । नाद्याः नद्यां भवाः 'पाथोनदीभ्यां ड्यण्' । याश्च समुद्रियाः समुद्रे भवाः । 'समुद्राभ्राद्घः' । वैश-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ढा मधु भक्षयन्ति । ता न आपश्शꣳ स्योना भवन्तु । [9]तन्नो विश्वे उप शृण्वन्तु देवाः । तदषाढा अभि संयन्तु यज्ञम् । तन्नक्षत्त्रं प्रथतां पशुभ्यः । कृषिर्वृष्टिर्यजमानाय कल्पताम् । [10]शुभ्राः कन्या युवतयस्सुपेशसः । कर्मकृतस्सुकृतो वीर्यावतीः ।

---

न्तीः वेशन्ते कासारे भवा वैशन्त्यः । 'वेशन्तहिमवद्भ्यामण्'। उतापि प्रासचीः प्रासच्यः प्रकर्षेण समवेताः प्रसचने भवाः नानोदकसङ्घाताः यासामपां मधु मधुरं रसं अषाढाः नक्षत्रं भक्षयन्ति । ता न इत्यादि । गतम् ॥

[9]उत्तराषाढानाम्—तन्न इति ॥ तत् अस्मदभिमतं विश्वे देवाः उपशृण्वन्तु अस्मत्सकाशमागत्य शृण्वन्तु तत् साधनं यज्ञं अषाढा अभिसंयन्तु आभिमुख्येन प्राप्नुवन्तु । तत् अषाढाख्यं नक्षत्रं अस्माकं पशुभ्यः पश्वर्थं प्रथतां पृथूभवतां, तथा सति कृषिः वृष्टिर्यजमानाय कल्पतां संपद्यताम् ॥

[10]शुभ्रा इति ॥ शुभ्राः शोभनाः[1] कन्याः तरुण्यः दीप्तिमत्यो वा । कन दीप्तौ । युवतयः मिश्रिण्यः सुपेशसः सुरूपाः कर्मकृतः कर्मकरणकुशलाः शोभनकारिण्यः वीर्यावतीः प्रसवसामर्थ्यवत्यः विश्वान् देवाननेन हविषा वर्धयन्त्योऽषाढाः अस्मद्यज्ञं उपयान्तु कामं यथायथा कामयामहे तदनुरूपमुपयान्तु ॥

---

[1] ग. शोभमानाः.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विश्वान्देवान् हविषा वर्धयन्तीः । अषाढाः काम-मुपयान्तु यज्ञम् ॥ १६ ॥ [11]यस्मिन्ब्रह्माऽभ्यजयं-थ्सर्वमेतत् । अमुं च लोकमिदमू च सर्वम् । तन्नो नक्षत्रमभिजिद्विजित्यं । श्रियं दधात्वहृणीयमानम् । [12]उभौ लोकौ ब्रह्मणा संजितेमौ । तन्नो नक्षत्रम-भिजिद्विचष्टाम् । तस्मिन्वयं पृतनास्सं जयेम ।

---

[11]अभिजितः—यस्मिन्निति ॥ यस्मिन् अभिजिदाख्ये पुण्ये नक्षत्रे ब्रह्मा अभ्यजयत् अभितः कात्स्र्न्येनाजयत् । अमुं च लोकं दिवं इदं च सर्वं पृथिव्यादिकं, ऊ इति निपातोऽनर्थकः पादपूरणार्थः । तत् अभिजिदाख्यं नक्षत्रं अस्मभ्यं विजित्य श्रियं दधातु ददातु । विजयपूर्विकां श्रियमित्यर्थः । यद्वा— जेतव्यान् जित्वा तत आदाय श्रियमस्यभ्यं ददातु । अहृणी-यमानं अहीयमानं कुतश्चिदपि । हृणीङ् कण्ड्वादियगन्तः ॥

[12]उभौ लोकाविति ॥ इमौ उभौ लोकौ ब्रह्मणा सं-जितौ सहजितौ अभिजिन्महिम्ना । तदभिजित् नक्षत्रं आत्मीयं महिमानं अस्मदर्थं विचष्टां पश्यतु प्रकटयतु । यद्वा—उभौ लोकौ ब्रह्मणा संजितौ यस्मिन्नक्षत्रे, तदभिजिन्नक्षत्रं अस्मान् वि-चष्टां सानुग्रहं पश्यतु । तस्मात् वयमपि तस्मिन् नक्षत्रे पृ-तनाः सङ्ग्रामान् संजयेम, तस्माच्च तत् अभिप्रेतं देवा अनुजान-न्तु कामं यथेष्टम् ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तन्नो देवासो अनुजानन्तु कामम् । [13]शृण्वन्ति श्रोणाममृतस्य गोपाम् । पुण्यामस्या उपशृणोमि वाचम् ॥ १७॥ महीं देवीं विष्णुपत्नीमजूर्याम् । प्रतीचीमेनाꣳ हविषा यजामः । [14]त्रेधा विष्णुरुरुगायो विचक्रमे । महीं दिवं पृथिवीमन्तरिक्षम् । तच्छ्रोणैति श्रव इच्छमाना । पुण्यꣳ श्लोकं यज-

---

[13] श्रोणायाः—शृण्वन्त्विति ॥ श्रोणां नक्षत्रं शृण्वन्तीति सर्वे, सर्वत्र ख्यातेति यावत् । शृण्वन्ति वा एतां वदन्तीं सर्वे, वदितुं कुशलेति यावत । अमृतस्य अमृतत्वस्य गोपां गोप्त्रीम् । आयप्रत्ययान्तात् क्विप्यतो लोपः । तादृशीं अस्याः पुण्यां वाचं अमृतत्वकरीं अहं उपशृणोमि समीपतः शृणोमि । तामिमां महीं महतीं देवीं विष्णुपत्नीं विष्णुदेवत्यां अजूर्यां केनचिदप्यहिंस्यां एनां प्रतीचीं अस्मदाभिमुख्येनाञ्चतीं हविषा यजामः ॥

[14] त्रेधेति ॥ विष्णुरुरुगायः उरुभिः महात्मभिः गातव्यः स्तोतव्यः त्रेधा विचक्रमे विक्रान्तवान् । महीं महतीं दिवं पृथिवीं अन्तरिक्षं च श्रोणायां, तस्मादियं श्रोणा श्रवः अन्नं यशो वा इच्छमाना उत्पादयन्ती यजमानाय एति गच्छति । कर्मणः संप्रदानत्वात् चतुर्थी । यजमानाय च पुण्यं श्लोकं स्तोत्रं कृण्वती कुर्वती—अहो सम्यगिष्टमनेनेति । यद्वा—पुण्यं श्लोकं यजमानाय प्रजाभिः कुर्वती कारयन्ती ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मानाय कृण्वती । [15]अष्टौ देवा वसवस्सोम्यासः । चतस्रो देवीरजराश्श्रविष्ठाः । ते यज्ञं पान्तु रजसः पुरस्तात् । संवत्सरीणममृतꣳ स्वस्ति ॥ १८॥ [16]यज्ञं नः पान्तु वसवः पुरस्तात् । दक्षिणतोऽभियन्तु श्रविष्ठाः । पुण्यं नक्षत्रमभि संविशाम । मा

---

[15]श्रविष्ठानाम्—अष्टाविति ॥ अष्टौ वसुनामानः देवाः सोम्याः सोमार्हाः, चतस्रश्च देव्यः श्रविष्ठाः नक्षत्रं, तारकापेक्षं चतुष्ट्वम् । अजराः अविनाशाः । ते वसवः श्रविष्ठाश्च । ते च ता श्च ते, पुंस एकशेषः । यज्ञं इममास्माकीनं पान्तु । रजसः अन्तरिक्षस्य परस्तात् उपरि स्थिताः रजोगुणतो वा रजोगुणापगमादनन्तरमित्यर्थः । संवत्सरीणं संवत्सरभाविनं 'संपरिपूर्वात्ख च' इति खः । अमृतं अमृतत्वं स्वस्ति[1] अविघ्नेन यथा भवति तथा यज्ञं पान्तु ॥

[16]यज्ञं न इति ॥ अस्माकं यज्ञं वसवः पुरस्तात् पूर्वस्यां दिशि पान्तु । श्रविष्ठाश्च दक्षिणतः दक्षिणस्यां दिश्यभियन्तु आभिमुख्येन प्राप्नुवन्तु । श्रविष्ठाः पुनः पितृसम्भवाः दक्षप्रजापतेः पितृत्वमप्यस्ति, ततस्तासां दक्षिणतोऽभिगमनं युक्तम् । वयमपीदं पुण्यं नक्षत्रं अभिसंविशाम आभिमुख्येन परिचराम:[2]. ततः अघशंसा पापरुचिः अरातिः नः माऽगन् मागमत् । अरात्यपेक्षं स्त्रीत्वम् । गमेर्लुङि 'मन्त्रे घस' इति च्लेर्लुक् ॥

---

[1] ग. अमृतमुदकं स्वस्ति. [2] ग. अभित आश्रयामः.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नो अरातिरघशꣳसाऽगन्न् । [17]क्षत्त्रस्य राजा वरुणोऽधिराजः । नक्षत्त्राणाꣳ शतभिषग्वसिष्ठः । तौ देवेभ्यः कृणुतो दीर्घमायुः । शतꣳ सहस्रा भेषजानि धत्तः । [18]यज्ञं नो राजा वरुण उपयातु । तन्नो विश्वे अभि संयन्तु देवाः ॥ १९ ॥ तन्नो नक्षत्त्रꣳ शतभिग्जुषाणम् । दीर्घमायुः प्रतिरद्भेषजानि । [19]अज एकपादुदगात्पुरस्तात् । विश्वा भूतानि

[17]शतभिषजः—क्षत्त्रस्येति ॥ क्षत्त्रस्य बलस्य क्षत्त्रजातेर्वा राजा स्वामी वरुणः अधिराजः अधिकदीप्तिः नक्षत्त्राणां मध्ये वसिष्ठः प्रशस्यतमः शतभिषङ्क्षत्रं, तौ वरुणशतभिषजौ देवेभ्यः अग्न्यादिभ्यः । यद्वा—यजमानस्यापि देवत्वात् । 'एष वा एतर्हीन्द्रो यो यजते'[1] इति । 'अग्निर्वै दीक्षितः तस्माद्देनम्' इति च । ऋत्विजोपि देवाः 'एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः'[2] इति । तेभ्यः दीर्घं आयुः कृणुतः कुरुतम् । भेषजानि अनिष्टोपशमनानि शतं सहस्रा सहस्रसंख्यानि धत्तः धत्ताम् ॥

[18]यज्ञमिति ॥ वरुणो राजा अस्माकं यज्ञमुपयातु । तेनैव वरुणागमहेतुना वरुणराजानः विश्वे देवा अपि । अथ तच्छतभिषक् नक्षत्रं जुषाणं प्रीयमाणं अस्मान्वा प्रीणयितृ अस्मभ्यं दीर्घमायुः भेषजानि च प्रतिरत् वर्धतु ॥

[19]प्रोष्ठपदानाम्—अज इति ॥ अज एकपादिति पदद्वयमपि

[1]सं. ६-१-११, [2]सं. १-७-३.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रति मोदमानः । तस्य देवाः प्रसवं यन्ति सर्वे । प्रोष्ठपदासो अमृतस्य गोपाः । [20]विभ्राजमानस्समिधान उग्रः । आऽन्तरिक्षमरुहदगन्द्याम् । तꣳ सूर्यं देवमजमेकपादम् । प्रोष्ठपदासो अनुयन्ति सर्वे ॥ २० ॥ [21]अहिर्बुध्नियः प्रथमान एति । श्रेष्ठो

---

अग्निविशेषस्याख्या अजः अजनः सुष्ठु गन्ता एकः पादोऽस्येति एकपात् एकेन पादेन देवान् रक्षन् । 'संख्यासुपूर्वस्य' इति लोपस्समासान्तः । स पुरस्तादुदगात् उदेति भूतजातेषु प्रथममाविर्भवति । विश्वानि च भूतानि प्रति मोदमानः प्रत्येकमनुगृह्णन् । तस्य प्रसवं अनुज्ञां सर्वेऽपि देवाः यन्ति तस्य विधेयतां गच्छन्ति न कोपि लङ्घितुं शक्नोति । प्रोष्ठपदाश्च नक्षत्रं तस्य प्रसवं यन्तीत्येव । अमृतस्य अमृतत्वस्य गोपाः गोपायितारः ॥

[20]विभ्राजमान इति ॥ विभ्राजमानः विशेषेण दीप्यमानः समिधानः समिन्धयन् भावान् उग्रः उद्गूर्णतेजाः उदकस्य वा दाता ईदृशोऽयं अज एकपात् अन्तरिक्षमारुहत् आरोहति । 'कृमृदृरुहिभ्यः छन्दसि' इत्यङ्, द्यां च अगन् गच्छति 'मन्त्रे घस' इति च्लेर्लुक् । तं अजं एकपादं देवं सूर्यं सावनं प्रेरकं वा सर्वे प्रोष्ठपदा अनुयन्ति अनुसरन्ति ॥

[21]उत्तरप्रोष्ठपदानाम्—अहिर्बुध्निय इति ॥ पदद्वयमग्नेरेव ना-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



देवानामुत मानुषाणाम् । तं ब्राह्मणास्सोमपास्सोम्यासः । प्रोष्ठपदासो अभि रक्षन्ति सर्वे । [22]चत्वार एकमभि कर्म देवाः । प्रोष्ठपदास इति यान्वदन्ति । ते बुध्नियं परिषद्यꣳ स्तुवन्तः । अहिꣳ

मान्तरम्[1] । पूर्वोत्तरप्रोष्ठपदनक्षत्रदेवतयोः सूर्याग्न्योः द्विनामत्वमन्यत्र सिद्धं 'अजोऽस्येकपादहिरसि बुध्नियः'[2] इति । अस्त्येव ब्राह्मणे धिष्णियप्रकरणे 'द्वेद्वे नामनी कुरुध्वम्'[3] इति । 'अहे बुध्निय मन्त्रं मे गोपाय'[4] इत्युपस्थाने च । प्रथमानः विश्वं व्याप्नुवन् एति गच्छति । श्रेष्ठः प्रशस्यतमः देवानां मध्ये मानुषाणामपि पूज्यतमः । तं देवं अहिर्बुध्नियं ब्राह्मणाः सोमपाः सोमस्य पातारः सोम्याः सोमार्हाः प्रोष्ठपदाश्चाभिरक्षन्ति अभितः तर्पयन्ति ॥

[22]चत्वार इति ॥ चत्वारोपि देवाः एकं कर्माभिगम्य संभूय साधयन्ति । यद्वा—कर्मदेवाः सुकृतातिशयेन देवत्वमाप्ताः 'ये कर्मणा देवानपियन्ति'[5] इति । प्रोष्ठपदास इति यान्वदन्ति लोके ते चत्वारोपि संभूय कर्माणि साधयन्ति । ते पूर्वोक्तदेवाः प्रोष्ठपदाः बुध्नियं परिषद्यं परित उपास्यं उपरि वा सीदन्तं अहिं च स्तुवन्तः नमसा नमस्कारादिना अन्नेन हविषा वा उपसद्य उपसङ्गम्य रक्षन्ति तर्पयन्ति । यद्वा—

[1] पदद्वयं रुद्रविशेषस्याख्या. [2] सं. १-३-३. [3] सं. ६-३-१.
[4] ब्रा. १-२-१. [5] उ. २-८.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रक्षन्ति नमसोपसद्यं । [23]पूषा रेवत्यन्वेति पन्थाम्। पुष्टिपती पशुपा वाजबस्त्यौ ॥ २१ ॥ इमानि हव्या प्रयता जुषाणा । सुगैर्नो यानैरुपयातां यज्ञम् । [24]क्षुद्रान्पशून्रक्षतु रेवती नः । गावो नो अश्वाꣳ अन्वेतु पूषा । अन्नꣳ रक्षन्तौ बहुधा विरूपम् ।

---

एकं किंचित् प्रशस्तं कर्म चत्वारस्ते अभिगच्छन्ति, ते तत्कर्मकारिणो जनाः बुध्नियं अहिं च स्तुवन्तः नमस्कारादिना उपसद्य रक्षन्ति तर्पयन्ति ॥

[23]रेवत्याः—पूषेति ॥ पूषा रेवती च पन्थां एकं मार्गं अन्वेति अनुगच्छति संहत्यकारिणौ वर्तेते । तौ कौ? पुष्टिपती पुष्टेः पातारौ पशुपा पशूनां पालयितारौ । 'सुपां सुलुक्' इत्याकारः । वाजबस्त्यौ वाजेन अन्नेन बस्त्यौ बलहेतू जगताम् । बले वा साधू । बस्तिशब्दः दासीभारादिषु द्रष्टव्यः । यद्वा—वाजो बस्त्यो ययोस्तादृशौ तौ इमानि अस्मदीयानि हव्यानि प्रयता प्रयतानि जुषाणा सेवमानौ सुगैः शोभनगमनसाधनैः यानैर्वाहनैः नः यज्ञं उपयातां उपगच्छताम् ॥

[24]क्षुद्रानिति ॥ नः क्षुद्रान् अजादीन् पशून् रेवती रक्षतु । नः गावः गाः । आत्वाभावः छान्दसः । अश्वांश्च पूषाऽन्वेतु रक्षतु । तौ द्वावपि अन्नं विरूपं विविधरूपं बहुधा रक्षन्तौ वाजं अन्नवन्तं यज्ञं यजमानाय सनुतां दत्ताम् । षणु दाने ॥



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वाजं सनुतं यजमानाय यज्ञम् । [25]तदश्विनावश्वयुजोपयाताम् । शुभं गमिष्ठौ सुयमेभिरश्वैः । स्वं नक्षत्रं हविषा यजन्तौ । मध्वा संपृक्तौ यजुषा समक्तौ ॥ २२॥ [26]यौ देवानां भिषजौ हव्यवाहौ । विश्वस्य दूतावमृतस्य गोपौ । तौ नक्षत्रं जुजुषाणोपयाताम् । नमोऽश्विभ्यां कृणुमोऽश्वयु-

---

[25]अश्वयुजोः—तदिति ॥ अश्विनौ देवते अश्वयुजा अश्वयुग्भ्यां सह । तृतीयाद्विवचनस्याकारः । तत् मदीयं कर्म उपयाताम् । शुभं गमिष्ठौ अतिशयेन शोभनं गन्तारौ । गन्तृशब्दात् 'तुच्छन्दसि' इति इष्ठनि 'तुरिष्ठेमेयस्सु' इति लोपः। सुयमेभिः सुदान्तैः अश्वैः, स्वं आत्मीयं नक्षत्रं अश्वयुगाख्यं हविषा यजन्तौ पूजयन्तौ, मध्वा मधुरसेन हविषा संपृक्तौ यजुषा मन्त्रेण समक्तौ सम्यक् प्रकाशितौ ॥

[26]यौ देवानामिति ॥ अश्विनौ देवानां भिषजौ हव्यवाहौ हविषां वोढारौ वृष्टिद्वारेण । विश्वस्य लोकस्य दूतौ दूतवद्धितकारिणौ अमृतस्य अमृतत्वस्य गोपौ गोपायितारौ । तौ नक्षत्रं आत्मीयं जुजुषाणा सेवमानौ । छान्दसस्य लिटः कानजादेशः । तावस्मद्यज्ञं उपयाताम् । ताभ्यां अश्विभ्यां अश्वयुग्भ्यां च नमः कृणुमः कुर्मः ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गभ्याम् । [27]अप पाप्मानं भरणीर्भरन्तु । तद्यमो राजा भगवान् विचष्टाम । लोकस्य राजा महतो महान् हि । सुगं नः पन्थामभयं कृणोतु । [28]यस्मिन्नक्षत्रे यम एति राजा । यस्मिन्नेनमभ्यषिञ्चन्त देवाः । तदस्य चित्रꣳ हविषा यजाम । अप पाप्मानं भरणीर्भरन्तु । [29]निवेशनी [30]यत्ते देवा अ-

---

[27]भरणीनाम्—अपेति ॥ भरणीः नक्षत्रं नः पापं अपभरन्तु अपहरन्तु । 'हृग्रहोर्भः' इति भत्वम् । यमश्च राजा भगवान् ऐश्वर्यवान् तदस्मदभिमतं विचष्टां पश्यतु, यथा नः सिद्ध्यति तथेति । महतः लोकस्य राजा स्वामी स्वयमपि महान् । सुगं देशान्तरगमने शोभनगमनं नः पन्थां पन्थानं कर्ममार्गं वा लोकान्तरगमने अभयं हिंसारहितं कृणोतु करोतु ॥

[28]यस्मिन्निति ॥ यस्मिन्नक्षत्रे यमः राजा एति स्वामित्वेनानुप्रविशति । किं च—यस्मिन्नक्षत्रे एनं देवाः पितृराज्ये अभ्यषिञ्चन्त । तत् भरणीनक्षत्रं अस्य यमस्य संबन्धि चित्रं चायनीयं वयं हविषा यजाम । अप पाप्मानमिति । गतम् ॥

[29—30]अमावास्यायाः—'निवेशनी, यत्ते देवा अदधुः' इति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इंधुः ॥ २३ ॥

तताऱ मह्यं प्रासचीर्या यान्तु यज्ञं वाचङ्ं स्व-स्ति देवा अनु यन्ति सर्वे वाजवस्त्यौ समक्तौ दे-वास्त्रीणि च ॥ २ ॥

[1]नवोनवो भवति जायमानो [2]यमादित्या अ-

व्याख्याते चैते 'पूर्णा पश्चात्'[1] इत्यत्र ॥

इति तृतीये प्रथमे द्वितीयोऽनुवाकः.

[1—2]अथ 'चन्द्रमा वा अकामयत'[2] इत्यादीनां सप्तानां क्रमेण याज्यानुवाक्याः द्वेद्वे । तत्र चन्द्रमसः (ननु 'नक्षत्रेष्टका उप दधात्येतानि वै दिवो ज्योतीꣳषि तान्येवावरुन्धे'[3] इति ब्राह्मणे 'कृत्तिका नक्षत्रमग्निर्देवता'[4] इत्यादीनामष्टाविंशतिनक्षत्राणां दर्शपूर्णमासयोश्च त्रिंशतामेवोपधानमुक्तम् । किञ्च—'अभिचरन् श्येनचिता यजेत' इत्यत्र 'अग्नेः कृत्तिकाः'[5] इति त्रिंशतामेवोपधानम् । अत्र नक्षत्रेष्ट्यां चन्द्रादिसप्तानां यजनं किमर्थमित्यत आह—चन्द्रमा वा अकामयत इत्यादि । चन्द्रादीनामपि नक्षत्राधीनत्वात् चन्द्रसूर्ययोर्नक्षत्रेषु गमनं प्रसिद्धम् । अवशिष्टानां त्रयाणां तद्विभागतत्सन्धानतदात्मत्वेन अदितेर्विष्णोश्च यजनं नक्षत्रसत्रकर्तुः यजमानस्य ज्योतिष्प्रावाप्तये प्रतिष्ठायै च भवति । तेषां द्वेद्वे याज्यानुवाक्ये)[6] ।

[1] सं. ३-५-१. [2] ब्रा. ३-१-६. [3] सं. ५-४-१

[4] स. ४-४-१०, [5] ब्रा. १-५-१. [6] कुण्डलितो ग्रन्थः ग पुस्तकमात्रे वर्तते.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शुमाप्याययन्ति । [3]ये विरूपे समनसा संव्ययन्ती । समानं तन्तुं परि तातनाते । विभू प्रभू अनुभू विश्वतो हुवे । ते नो नक्षत्रे हवमागमेतम् । [4]वयं देवी ब्रह्मणा संविदानाः । सुरत्नासो देववीतिं

---

नवोनवो भवति, यमादिशा अंशुमिति । व्याख्याते चैते[1] द्वितीयकाण्डस्य चतुर्थान्त्ये ॥

[3]अहोरात्रयोः—ये विरूपे इति ॥ अहोरात्रे विरूपे विविधरूपे शुक्लकृष्णरूपे समनसा समानमनस्के ऐकमत्यं गते । पूर्ववदाकारः । संव्ययन्ती समन्तादाच्छादयन्ती शुक्लकृष्णे इव वस्त्रे संव्ययन्ती । औङश्शीभावः, न स्त्रीप्रत्ययः । समानं एकं तन्तुं तायमानं संवत्सरं यज्ञं वा परि तातनाते परितो विस्तारयतः । तनोतेः छन्दसि लिटि एत्वाभ्यासलोपाभावे 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । विभू व्याप्तिमती अविच्छेदेन प्रवृत्तत्वात् । 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घत्वम् । प्रभू पर्याप्ते भावानां निष्पत्तौ । अनुभू अनुक्रमेण भवन्ती । लोकस्य वा कृताकृते अनुभवन्ती । पूर्ववत् सवर्णदीर्घत्वम् । ते अहं विश्वतो हुवे सर्वेण प्रकारेणाह्वयामि ते चाहोरात्रे नक्षत्रे नक्षत्रविशेषयुक्ते अस्मिन्वा नक्षत्रेऽहनि वा नः हवं यज्ञं आगमेतं युवामागच्छतम् । लिङ्याशिष्यङ् ॥

[4]वयं देवी इति ॥ वयं ब्रह्मणा मन्त्रेण संविदानाः

---

[1] सं. २-४-१४.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दधा॑नाः । अ॒हो॒रा॒त्रे ह॒विषा॑ व॒र्धय॑न्तः । अति॑ पा॒प्मान॒मति॑मुक्त्या गमेम । [5]प्रत्यु॑वदृश्याय॒ती ॥२४
व्यु॒च्छन्ती॑ दु॒हि॒ता दि॒वः । अ॒पो म॒ही वृ॑णु॒ते चक्षु॑षा । [6]तम॒ो ज्योति॑ष्कृणोति सू॒नरी॑ । उदु॒स्रिया॑स्स-

---

ऐकमत्यं गताः सुरत्नासः शोभनेन हविराख्येन कर्मसाधनेन तद्वन्तः । देववीतिं दधानाः देवानां यागं निर्वर्तयन्तः अहोरात्रे देवी देव्यौ देवनशीले । रात्र्यपेक्षं स्त्रीत्वं, लिङ्गव्यत्ययो वा । हविषा वर्धयन्तः पाप्मानं अतिगमेम अतिक्रमेम अतिमुक्त्या अत्यर्थं पाप्मनां मोचनेनानेन कर्मणा ॥

[5]उषसः—प्रतीति परोष्णिक् ॥ उ इत्यवधारणे । व्युच्छन्ती प्रभान्ती उषा आयती आगच्छन्त्येव प्रत्यदृशि प्रत्येकं सर्वैर्दृश्यते । आत्माभिमुखं वा दृश्यते । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति लघूपधगुणाभावः । दिवो दुहिता दुहितृस्थानीया तत उपलब्धेः । अपः कर्माणि उदकानि वा वृणुते छादयति चक्षुषा प्रकाशेन विवृणोतीत्यर्थः । प्रकाशावरणं विवरणमेव । मही महनीया सर्वैः ॥

[6]तम इति जगती ॥ तमोभूतमिदं जगत् ज्योतिष्कृणोति प्रकाशवत्करोति उषा सूनरी सुष्ठु नेत्री प्रजानां शोभननरा वा, सर्वे हि तत्र प्रबुध्यन्ते । किञ्च—तस्मिन् काले सूर्यः उस्रियाः रश्मीन् उत्सचते उच्छ्रितं भजते । किञ्च—हे उषः! तवेत् तवैव व्युषि व्युष्टौ । उच्छतेः क्विपि अन्त्यविकारः छा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चते सूर्यः । सचा उद्यन्नक्षत्रमर्चिमत् । तवेदुषो व्युषि सूर्यस्य च । [7]सं भक्तेन गमेमहि । तन्नो नक्षत्रमर्चिमत् । भानुमत्तेज उच्चरत् । उप यज्ञमिहागमत् ॥ २५ ॥ [8]प्र नक्षत्राय देवाय । इन्द्रायेन्दुꣳ हवामहे । स नस्सविता सुवथ्सनिम् । पु-

न्दसः वसेर्वा संप्रसारणे 'शासिवसि' इत्यादिना षत्वम् । तव सूर्यस्य च व्युष्टौ उदये सत्येव युवाभ्यां सचा सह उद्यन्नक्षत्रं दिवसस्य संज्ञाकारि अर्चिमत् दीप्तिमत् भवति पूजितं भवति, अस्माकं कर्मयोग्यं जायते ॥

[7]नक्षत्राणां—संभक्तेन इत्यनुष्टुभौ ॥ भक्तेन अन्नेन हविषा सङ्गमेमहि कर्मवन्तो भूयास्म । 'लिङ्याशिष्यङ्' 'समोगमृच्छि' इत्यात्मनेपदम् । हेतुमाह—तत् नक्षत्रं यत्र कर्म क्रियते तदिदानीमर्चिमत् पूजितं भानुमत् दीप्तिमत् तेजः तेजस्वि पुण्यत्वादीदृशं सत् उच्चरत् उद्गच्छत् अस्माकं यज्ञं उपागमत् उपागच्छति उपागच्छतु वा इह अस्मिन्नहनि ततस्सं भक्तेन गमेमहीति॥

[8]प्रनक्षत्रायेति ॥ देवाय देवनशीलाय इन्द्राय ईश्वराय स्वकार्यकरणकुशलाय नक्षत्राय नक्षत्रात्मने नक्षत्राभिमानिने इन्दुं अमृतकल्पं हविः प्रहवामहे प्रकर्षेण आह्वयामः आनयामः जुहुमो वा । स च सविता कर्मणामनुज्ञाता नक्षत्राख्यो देवः अस्मभ्यं सनिं धनं सुवत् अनुजानातु ददातु पुष्टिदां पुष्टेर्दातारं पर्याप्तं वीरवत्तमं अतिशयेन पुत्रादियुक्तम् ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ष्टिदां वीरवत्तमम् । [9]उदु त्यं [10]चित्रम् । [11]अदितिर्न उरुष्यतु [12]महीमूषु मातरम् । [13]इदं विष्णुः [14]प्र तद्विष्णुः । [15]अग्निर्मूर्धा [16]भुवः । [17]अनु नोऽद्यानुमति [18]रन्विदनुमते त्वम् । [19]हव्यवाहं [20]स्विष्टम् ॥

आयत्यंगमाथ्स्विष्टम् ॥ ३ ॥

---

[9—10]सूर्यस्य—उदुत्यं, चित्रमिति ॥ व्याख्याते ग्रहप्रश्ने[1] ॥

[11—12]अदितेः—अदितिर्नः, महीमूष्विति ॥ व्याख्याते 'वैश्वानरो नः'[2] इत्यत्र ॥

[13—14]विष्णोः—इदं विष्णुः, प्रतद्विष्णुस्तव त इति ॥ प्रथमा 'युञ्जते मनः'[3] इत्यत्र व्याख्याता । इतरा 'जुष्टीनरः'[4] इत्यत्र ॥

[15—16]अग्नेः—अग्निर्मूर्धा, भुव इति ॥ अग्निकाण्डे व्याख्याते[5] ॥

[17—18]अनुमतेः—अनुनोऽद्य, अन्विदनुमत इति ॥ 'इदं वामास्ये'[6] इत्यत्र व्याख्याते । अत्रचनुमती समस्वेवेति केचित् । सर्वत्र कृत्तिकादिष्वित्यपरे ॥

[19—20]अथ संयाज्ये—हव्यवाहं, स्विष्टमिति ॥ व्याख्याते 'जुष्टः'[7] इत्यत्र ॥

इति ब्राह्मणे तृतीयाष्टके प्रथमे तृतीयोऽनुवाकः.

---

[1]सं. १-४-४३. [2]सं १-५-११. [3]सं. १-२-१३. [4]ब्रा. २-४-३
[5]सं. ४-४-४. [6]सं. ३-३-११. [7]ब्रा. २-४-१.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



[1]अग्निर्वा अकामयत । अन्नादो देवानाꣳ स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत् । ततो वै सोऽन्नादो देवानामभवत् । अग्निर्वै देवानामन्नादः । यथा ह वा अग्निर्देवानामन्नादः । एवꣳ ह वा एष मनुष्याणां भवति। य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा कृत्तिकाभ्यस्स्वाहा । अम्बायै स्वाहा दुलायै स्वाहा । नितत्नै स्वाहाऽभ्रयन्त्यै स्वाहा । मेघयन्त्यै स्वाहा वर्षयन्त्यै स्वाहा । चुपुणीकायै स्वाहेति ॥ २७॥ [2]प्रजापतिः प्रजा असृजत । ता अस्माथ्सृष्टाः पराचीरायन् ।

---

[1]अथ नक्षत्रेष्टीनां ब्राह्मणं—अग्निर्वा अकामयतेत्यादि ॥ देवानां मध्ये अहं अतिशयेन अन्नादः स्यामिति । स तथा कामयमानः एतमग्निं कृत्तिकादेवत्यं अष्टाकपालं पुरोडाशं निरवपत् । एकस्यैव यष्टृत्वयष्टव्यत्वोपपत्तिः प्रागेवोक्ता । ततो वा इति । गतम् । यथा हेत्यादि । यष्टुः विदुषश्च स्तुतिः । सोऽत्रेति स यष्टा अत्र इष्टौ वक्ष्यमाणान् होमान् जुहोति । अम्बाद्याः सप्त कृत्तिकाः तारकाख्या अग्निकाण्डे व्याख्याताः* ॥

[2]प्रजापतिरिति ॥ प्रजापतिना सृष्टाः प्रजाः अस्मात्परा-

---

*सं. ४-४-५.



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तासाꣳ रोहिणीमभ्यध्यायत् । सोऽकामयत । उप मा वर्तेत । समेनया गच्छेयेति । स एतं प्रजापतये रोहिण्यै चरुं निरवपत् । ततो वै सा तमुपावर्तत । समेनया गच्छत । उप ह वा एनं प्रियमावर्तते । सं प्रियेण गच्छते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । प्रजापतये स्वाहा रोहिण्यै स्वाहा । रोचमानायै स्वाहा प्रजाभ्यस्स्वाहेति ॥ २८ ॥ [3]सोमो वा अकामयत । ओषधीनाꣳ राज्यमभिजयेयमिति । स एतꣳ सोमाय मृगशीर्षाय श्यामाकं चरुं पयसि निरवपत् । ततो वै स ओषधीनाꣳ राज्यमभ्यज-

---

चीः अपुनरावृत्ता गताः । तासां मध्ये रोहिणीमभ्यध्यायत् प्रजापतिः ध्यातवान् । अथ स तामभिध्यायन्नकामयत इयं मामुपावर्तेत उपागच्छेत् अहं एनया संगच्छेयेति । स एतमिति । गतम् । उप हेत्यादि । यष्टुर्विदुषश्च फलम् । रोचमानाया इति । प्रजापतये रोचत इति रोचमाना रोहिणी तारकाख्यैषा प्रजानां च मध्ये रोचत इति सर्वाभ्यः प्रजाभ्यः होमः ॥

[3]ओषधीनां राज्यं राजत्वम् । गतमन्यत् । समानानां

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यत् । समानानाꣳ ह वै राज्यमभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । सोमाय स्वाहा मृगशीर्षाय स्वाहा । इन्वकाभ्यस्स्वाहौषधीभ्यस्स्वाहा । राज्याय स्वाहाऽभिजित्यै स्वाहेति ॥ २९ ॥ [4]रुद्रो वा अकामयत । पशुमान्थ्स्यामिति । स एतꣳ रुद्रायार्द्रायै प्रैय्यंङ्गवं चरुं पयसि निरवपत् । ततो वै स पशुमानभवत् । पशुमान् ह वै भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति। रुद्राय स्वाहाऽऽर्द्रायै स्वाहा । पिन्वमानायै स्वाहा पशुभ्यस्स्वाहेति ॥ ३० ॥ [5]ऋक्षा वा इयमलोमकाऽऽसीत् । साऽकामयत । ओषधीभिर्वनस्पतिभिः प्रजायेयेति । सैतमदित्यै पुनर्वसुभ्यां चरुं निरवपत् । ततो वा इयमोषधीभिर्वनस्पतिभिः प्राजा-

---

हेति । यष्टुर्विदुषश्च स्तुतिः । मृगशीर्षतारका इन्वकाः । इवि प्रीणने । क्वनिपि तारकादित्वादित्वाभावः ॥

[4]प्रैय्यङ्गवमिति ॥ 'ओरञ्' । पिन्वमाना पशून् वर्धयमाना ॥

[5]ऋक्षा वा इति ॥ इयं पृथिवी पूर्वं ऋक्षा शून्या अ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यत । प्रजायते ह वै प्रजया पशुभिः । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अदित्यै स्वाहा पुनर्वसुभ्याम् । स्वाहाऽऽभूत्यै स्वाहा प्रजात्यै स्वाहेति ॥ ३१ ॥ [6]बृहस्पतिर्वा अकामयत । ब्रह्मवर्चसी स्यामिति । स एतं बृहस्पतये तिष्याय नैवारं चरुं पयसि निरवपत् । ततो वै स ब्रह्मवर्चस्यभवत् । ब्रह्मवर्चसी ह वै भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । बृहस्पतये स्वाहा तिष्याय स्वाहा । ब्रह्मवर्चसाय स्वाहेति ॥ ३२ ॥ [7]देवासुरास्संयत्ता आसन्न् । ते देवास्सर्पेभ्य आश्रेषाभ्य आज्ये करम्भं निरवपन्न् । तानेताभिरेव देवताभिरुपानयन्न् । एताभिर्ह वै देवताभिर्द्विषन्तं भ्रातृ-

---

लोमका ओषध्यादिभिर्लोमस्थानीयै रहिता । पूर्ववदित्वाभावः । आभूतिः प्रजाती पुनर्वसू तारके ॥

[6]नैवारमिति ॥ अनुदात्तादित्वेऽपि पलाशादित्वादञ्भावः ॥

[7]देवासुरा इत्यादि ॥ करम्भनिर्वापेण तानसुरानुपानयन् नाशितवन्तः । एताभिर्देवताभिः सर्वैराश्लेषाभिश्च । द्रवसंमिश्राः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्यमुपनयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । सर्पेभ्यस्स्वाहाऽऽश्रेषाभ्यस्स्वाहा । दन्दशूकेभ्यस्स्वाहेति ॥ ३३ ॥ [8]पितरो वा अकामयन्त । पितृलोक ऋध्नुयामेति । त एतं पितृभ्यो मघाभ्यः पुरोडाशꣳ षट्कपालं निरवपन् । ततो वै ते पितृलोक आर्ध्नुवन् । पितृलोके ह वा ऋध्नोति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । पितृभ्यस्स्वाहा मघाभ्यः । स्वाहाऽनघाभ्यस्स्वाहाऽगदाभ्यः । स्वाहाऽरुन्धतीभ्यस्स्वाहेति ॥ ३४ ॥ [9]अर्यमा वा अकामयत । पशुमान्त्स्यामिति । स एतमर्यम्णे फल्गुनीभ्यां चरुं निरवपत् । ततो वै स पशुमानभवत् । पशुमान् ह वै भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अर्यम्णे स्वाहा फल्गुनीभ्याꣳ स्वाहा । पशुभ्यस्स्वा-

---

सक्तवः करम्भाः । दंदशूकाः दंशनशीलाः सर्पाख्यैषा । 'यजजपदशां यङः' इत्यूकप्रत्ययः ॥

[8-9]अनघाः, अगदाः अरुन्धत्य इति मखानामाख्याः ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हेति ॥ ३५ ॥ [10]भगो वा अकामयत । भगी श्रेष्ठी
देवानाꣳ स्यामिति । स एतं भगाय फल्गुनीभ्यां
चरुं निरवपत् । ततो वै स भगी श्रेष्ठी देवानाम-
भवत् । भगी ह वै श्रेष्ठी समानानां भवति । य
एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र
जुहोति । भगाय स्वाहा फल्गुनीभ्याꣳ स्वाहा ।
श्रैष्ठ्याय स्वाहेति ॥ ३६ ॥ [11]सविता वा अकाम-
यत । श्रन्मे देवा दधीरन् । सविता स्यामिति । स
एतꣳ सवित्रे हस्ताय पुरोडाशं द्वादशकपालं निर-
वपदाशूनां व्रीहीणाम् । ततो वै तस्मै श्रद्देवा अ-
दधत । सविताऽभवत् । श्रद्ध वा अस्मै मनुष्या
दधते । सविता समानानां भवति । य एतेन ह-
विषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति ।

---

[10]भगी ऐश्वर्यादिमान् । श्रेष्ठी श्रेष्ठैनैश्वर्यादिना तद्वान् ॥

[11]श्रन्म इति ॥ श्रद्दधीरन् देवा मह्यं, श्रद्धेयवचनः तेषां भूयासम्, सविता प्रेरकः अनुज्ञाता वा । आशुव्रीहयः त्रिपक्षपक्काः । अनुज्ञातृविशेषाः ददत्, पृणन्, प्रयच्छन्, प्रतिगृभ्णन् । ददत् विधानेन, पृणन् प्रीणयन्, प्रयच्छन् विध्यनपेक्ष उदारः, प्रतिगृभ्णन् उक्तं स्वीकुर्वन् ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सवित्रे स्वाहा हस्ताय । स्वाहा ददते स्वाहा पृणते । स्वाहा प्रयच्छते स्वाहा प्रतिगृभ्णते स्वाहेति ॥ ३७ ॥ [12]त्वष्टा वा अकामयत । चित्रं प्रजां विन्देयेति । स एतं त्वष्ट्रे चित्रायै पुरोडाशमष्टाकपालं निरवपत् । ततो वै स चित्रं प्रजामविन्दत । चित्रꣳ ह वै प्रजां विन्दते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । त्वष्ट्रे स्वाहा चित्रायै स्वाहा । चैत्राय स्वाहा प्रजायै स्वाहेति ॥ ३८ ॥ [13]वायुर्वा अकामयत । कामचारमेषु लोकेष्वभिजयेयमिति । स एतद्वायवे निष्ट्यायै गृष्ट्यै दुग्धं पयो निरवपत् । ततो वै स कामचारमेषु लोकेष्वभ्यजयत् । कामचारꣳ ह वा एषु लोकेष्वभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । वायवे स्वाहा निष्ट्यायै स्वाहा । कामचाराय स्वाहाऽभिजित्यै स्वाहेति ॥ ३९ ॥ [14]इन्द्राग्नी वा अकामयेताम् । श्रैष्ठ्यं

---

[12]चित्रं बहुधा प्रजां विन्देय लप्सीयेति । चैत्राय चित्रत्वाय ॥

[13—14]इच्छया सर्वत्र चारः कामचारः । निष्ट्या इति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



देवानांमभिजंयेवेति । तावेतमिन्द्राग्निभ्यां विशा- खाभ्यां पुरोडाशमेकांदशकपालं निरंवपताम् । ततो वै तौ श्रैष्ठ्यं देवानांमभ्यंजयताम् । श्रैष्ठ्यꣳ ह वै संमानानांमभिजंयति । य एतेनं हविषा य- जंते । य उं चैनदेवं वेदं । सोऽत्रं जुहोति । इन्द्रा- ग्निभ्याꣳ स्वाहा विशांखाभ्याꣳ स्वाहां । श्रैष्ठ्यांय स्वाहाऽभिजित्यै स्वाहेतिं ॥ ४० ॥ [15]अथैतत्पौर्ण- मास्या आज्यं निर्वंपति । कामो वै पौर्णमासी । काम आज्यंम् । कामेनैव कामꣳ समंर्धयति । क्षिप्रमेनꣳ स काम उपंनमति । येन कामेंन यजंते । सोऽत्रं जुहोति । पौर्णमास्यै स्वाहा कामांय स्वा- हाऽऽगंत्यै स्वाहेतिं ॥ ४१ ॥ ४ ॥

---

स्वातेराख्या । गृष्टिस्सकृत्प्रसूता । गतमन्यत् ॥

[15]कामो वा इति ॥ तत्साधनत्वात्ताच्छब्द्यम् ॥

इति तृतीये प्रथमे चतुर्थोऽनुवाकः.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



[1]मित्रो वा अकामयत । मित्रधेयमेषु लोकेष्वभि जयेयमिति । स एतं मित्रायानूराधेभ्यश्चरुं निरवपत् । ततो वै स मित्रधेयमेषु लोकेष्वभ्यजयत् । मित्रधेयꣳ ह वा एषु लोकेष्वभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । मित्राय स्वाहाऽनूराधेभ्यस्स्वाहा । मित्रधेयाय स्वाहाऽभिजित्यै स्वाहेति ॥ ४२ ॥ [2]इन्द्रो वा अकामयत । ज्यैष्ठ्यं देवानामभिजयेयमिति । स एतमिन्द्राय ज्येष्ठायै पुरोडाशमेकादशकपालं निरवपन्महाव्रीहीणाम् । ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत् । ज्यैष्ठ्यꣳ ह वै समानानामभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । इन्द्राय स्वाहा ज्येष्ठायै स्वाहा । ज्यैष्ठ्याय स्वाहाऽभिजित्यै स्वाहेति ॥ ४३ ॥ [3]प्रजापतिर्वा अकामयत । मूलं प्रजां विन्देयेति । स

---

[1]मित्रो वा इति ॥ मित्रधेयं मित्रत्वं सर्वस्य । मित्राय वा धातव्यं दातव्यं मित्रधेयम् ॥

[2]महाव्रीहयः महाशालयः ॥

[3]मूलं प्रधानभूताम् ॥



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एतं प्रजापतये मूलाय चरुं निरवपत् । ततो वै स मूलं प्रजामविन्दत । मूलꣳ ह वै प्रजां विन्दते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । प्रजापतये स्वाहा मूलाय स्वाहा । प्रजायै स्वाहेति ॥ ४४ ॥ [4]आपो वा अकामयन्त। समुद्रं काममभिजयेमेति । ता एतमद्भ्योऽषाढाभ्यश्चरुं निरवपन्न् । ततो वै तास्समुद्रं काममभ्यजयन्न् । समुद्रꣳ ह वै काममभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अद्भ्यस्स्वाहाऽषाढाभ्यस्स्वाहा । समुद्राय स्वाहा कामाय स्वाहा । अभिजित्यै स्वाहेति ॥ ४५ ॥ [5]विश्वे वै देवा अकामयन्त । अनपजय्यं जयेमेति । त एतं विश्वेभ्यो देवेभ्योऽषाढाभ्यश्चरुं निरवपन्न् । ततो वै तेऽनपजय्यमजयन्न् । अनपजय्यꣳ ह वै जयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र होजुति । विश्वेभ्यो देवेभ्य-

---

[4]समुद्रं कामं कामानां साधकमभिजयेमेति ।

[5-6]अनपजय्यं केनचिदप्यपजेतुमशक्यम् । 'क्षय्यजय्यौ शक्यार्थे'

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

